१६१५—सेतुं, महेन्द्रं, मलयं स-विन्ध्यं,
स-माल्यवन्तं गिरिमृष्यमूकम्, ॥
स-दण्डकाऽरण्य-वतीं च पम्पां
रामः प्रियायाः कथयन् जगाम. ॥ २५ ॥

सेतुमित्यादि—एष सेतुस्त्वदर्थे मया कारितः। एते च महेन्द्रादयः इत्यादि प्रियायाः सीतायाः कथयन् जगाम। अयोध्याभिमुखं गतवान् ॥

१६१६—एते ते मुनि-जन-मण्डिता दिगन्ताः,
शैलोऽयं लुलित-वनः स चित्रकूटः, ॥
गङ्गेयं सु-तनु-! विशाल-तीर-रम्या,
मैथिल्या रघु-तनयो दिशन् ननन्द. ॥ २६ ॥

एते इत्यादि—शोभना तनुः शरीरं यस्याः सा त्वं हे सुतनु ! क्वचिदुकारान्तमपि स्त्रियः प्रोक्तमिति वचनात् नदीसंज्ञकत्वात् सम्बुद्धिह्रस्वत्वम्। 'कृषिचमितनिसर्जिमज्जिभ्यः' इत्यौणादिकस्तनुशब्दः। एते दिगन्ता मुनिजनैस्तन्निवासिभिर्मण्डिताः भूषिताः। अयं स चित्रकूटः यत्र भरतेनागम्य दृष्टोऽस्मि। लुलितवनोऽस्मद्वेगवशात्। इयं च गङ्गा विशालतीरतया रम्या। एवं मैथिल्या दिशन् कथयन् ननन्द मुदितः ॥

१६१७—शिञ्जान-भ्रमर-कुलाऽऽकुलाऽग्र-पुष्पाः
शीता-ऽम्भः-प्रविलय-संप्लवा ऽभिलीनाः ॥
एते ते सु-तनु ! पुरी-जनोपभोग्या
दृश्यन्ते नयन-मनोरमा वना ऽन्ताः. ॥ २७ ॥

शिञ्जानेत्यादि—हे सुतनु ! एते वनान्ताः पुर्या दृश्यन्ते। शिञ्जानैः कूजद्भिः भ्रमरकुलैः आकुलाग्राणि पुष्पाणि येषां वनान्तानाम्। प्रविलीयतेऽस्मिन्निति प्रविलयः। '३२३१। एरच् ।३।३।५६।' निमिलीभ्यां खलचोः प्रतिषेधो वक्तव्यः। '२५०९। विभाषा लीयतेः ।६।१।५१।' इत्यात्वं न भवति। शीताम्भसः प्रविलयः कुल्या तेन यः संप्लवः स्नापना तेनाभिलीनाः कुल्यया सिच्यमानमूलत्वात्। अत एव नयनमनोरमाः रमयतीति कर्तर्यच्। पश्चात् षष्ठीसमासः। एवं च पुरीजनानामयोध्यानिवासिनां उपभोग्याः ॥

१६१८–स्थानं नः पूर्व-जानामियमधिकमसौ[1]
प्रेयसी पूरयोध्या,
दूरादालोक्यते या हुत-विविध-हविः-
प्रीणिता ऽशेष-देवा, ॥
सो ऽयं देशो, रुदन्तं पुर-जनमखिलं
यत्र हित्वा प्रयातौ,
आवां सीते ! वना ऽन्तं सह धृत-धृतिना
लक्ष्मणेन क्षपा ऽन्ते. ॥ २८ ॥

स्थानं न इत्यादि—हे सीते ! असौ पुरी नोऽस्माकं पूर्वजानां स्थानमधिकं अतएव च प्रेयसी प्रियतमा । दूरादालोक्यते उच्चप्रासादयोगात् । या हुतैर्विविधैर्हविर्भिराज्यादिभिः प्रीणिता अशेषदेवा यत्र देशे । पुरजनमखिलं समस्तं रुदन्तं क्षपान्ते उषसि हित्वा त्यक्त्वा छलेन आवां वनान्तं प्रयातौ सोऽयं देशः सह लक्ष्मणेन धृतधृतिना धृतसौमनस्येन ॥

१६१९–तूर्याणामथ[2] निःस्वनेन सकलं
लोकं समापूरयन्
विक्रान्तैः करिणां गिरीन्द्र-सदृशां
क्ष्मां कम्पयन्[3] सर्वतः ॥
सा ऽऽनन्दा ऽश्रु-विलोचनः प्रकृतिभिः
सार्धं सहा ऽन्तः पुरः
सम्प्राप्तो भरतः स-मारुतिरलं
नम्रः समं मातृभिः ॥ २९ ॥

तूर्याणामित्यादि—अथानन्तरं भरतो हनूमतः समुपलब्धरामवृत्तान्तत्वात् सानन्दाश्रुविलोचनः सानन्दाश्रुणी विलोचने यस्य तथाभूतः प्रकृतिभिः अमात्यादिभिः सार्धं । सहान्तःपुरः अन्तःपुरेण समम् । मातृभिः कौसल्यादिभिः

---

१—स्रग्धरावृत्तम् '—म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात् । २—शार्दूलविक्रीडितवृत्तम् । लक्षणमुक्तम् । ३—'क्ष्मापयन्' इति पाठान्तरम् ।

सह मातृभिः हनूमता च सह । अयं नम्रः अनुद्रुतः 'समीपं मे नाथ आगतः' इति तर्याणां निःस्वनेन सकलं लोकं मार्गप्राप्तं समापूरयन् व्याप्नुवन् करिणां च गिरीन्द्रसदृशाम् । '४२९ । त्यदादिषु दृशः—।३।२।६०।' इति चकारात् क्विन् । विक्रान्तैः पादन्यासैः क्ष्मां कम्पयन् सर्वतो विधूनयन् । 'क्षमापयन्' इति पाठान्तरम् । तत्र '२५७० । अर्तिह्री—।७।३।३६।' इत्यादिना पुक् । सम्प्राप्तः रामसमीपमित्यर्थः ॥

१६२०—अथ स-सम्भ्रम-पौर-जना ऽऽवृतो
भरत-पाणि-धृतोज्ज्वल-चामरः ॥
गुरु-जन-द्विज-बन्द्यभिनन्दितः
प्रविशति स्म पुरं रघु-नन्दनः ॥ २० ॥

अथेत्यादि—अथ भरतसम्प्राहयनन्तरं रघुनन्दनो रामः ससम्भ्रमेण सादरेण सहर्षेण पौरजनेनावृतः । भरतपाणिना धृतमुज्ज्वलं चामरं यस्य । गुरुजनेन द्विजैर्बन्दिभिश्च स्तुतिपाठकैरभिनन्दितोऽभिष्टुतः सन् पुरमयोध्यां प्रविशति स्म प्रविष्टः ॥

१६२१—प्रविधाय धृतिं परां जनानां
युव-राजं भरतं ततोऽभिषिच्य ॥
जघटे तुरगाऽध्वरेण यष्टुं
कृत-सम्भार-विधिः पतिः प्रजानाम् ॥ २१ ॥

प्रविधायेत्यादि—प्रविश्य च पुरं प्रजानां पती रामः जनानां धृतिं प्रीतिरूपचेतोवृत्तिं परामुत्कृष्टां प्रविधाय कृत्वा भरतं च युवराजमभिषिच्य ततोऽनन्तरम् तुरगाध्वरेणाश्वमेधेन यष्टुं जघटे चेष्टितवान् । कृतसम्भारविधिः । संभ्रियत इति सम्भारः द्रव्यगण इत्यर्थः । कृतोऽनुष्ठितः सम्भारस्य विधिरितिकर्तव्यतालक्षणो येन स इति ॥

नायकाभ्युदयान्तं महाकाव्यमिति परिसमापय्य तत्र जयमिच्छता अस्मिन्नादरः कर्तव्य इति दर्शयन्नाह—

१६२२—इदमधिगत-मुक्ति-मार्ग-चित्रं
विविदिषतां वदतां च सन्-निबन्धात् ॥

---

१—द्रुतविलम्बितवृत्तम् । 'द्रुतविलम्बितमाह नभौ भरौ ।' इति लक्षणात् ॥

जनयति विजयं सदा जनानां
युधि सुसमाहितमैश्वरं यथा ऽस्त्रम्. ॥ ३२ ॥

इदमित्यादि—इदं महाकाव्यम्। उक्तेर्वचनस्य यो मार्गः पन्थाः सुसंस्कृतशब्दलक्षणः प्रपञ्चितः तेन चित्रं विस्मयनीयम् । सुसमाहितं अलङ्कारयुक्तम् । अधिगतं परिज्ञातं सज्जनानां विवदिषतां वक्तुमिच्छतां वदतां च वक्तुं प्रवर्तमानानां सदा विजयं जनयति । सन्निबन्धात् शोभनबन्धात्कारणात् । यथास्त्रमैश्वरं पाशुपतम्। अधिगतमुक्तिमार्गं अधिगतः प्राप्तः प्रज्ञातो मोचनमार्गः क्षेपणमार्गो येन। चित्रं नानावर्णकेन चित्रितत्वात्। सुसमाहितं युधि संग्रामे विजयं विदधाति तद्वत् ॥

तस्मादादरः कर्तव्य इति तत्रापि य एव व्याकरणमधीतवान् तस्यैवात्रादरो युक्त इति दर्शयन्नाह—

१६२३—दीप-तुल्यः प्रबन्धो ऽयं शब्द-लक्षण-चक्षुषाम् ॥
हस्ता ऽमर्ष इवा ऽन्धानां भवेद् व्याकरणादृते. ३३

दीपतुल्य इत्यादि—अयं प्रबन्धो महाकाव्यसंज्ञकः। प्रबध्यते विरच्यत इति कृत्वा। शब्दलक्षणमेव चक्षुर्येषां तेषां दीपतुल्यः। अत एवैतत्काव्याधिगमात् स्वातन्त्र्येणान्यानपि शब्दान् प्रयोक्तुं क्षमत्वात्। व्याकरणादृते विना हस्तामर्ष इवान्धानां हस्तामर्ष इवावबोधः यथा अन्धानां हस्तेन घटपटादिवत्। स्वपरामृश्यसंस्थानमात्रपरिज्ञानं यथावस्थितस्वरूपपरिज्ञानं एवमनधीतव्याकरणानां न शब्दस्वरूपपरिज्ञानं अन्यत्र शब्दश्रवणात् ततश्च तत्स्वरूपापरिज्ञानात् कुतोऽप्यन्यशब्दप्रयोग इति ॥

एवं च कृत्वा विदुषोऽनुरुध्यमानेन मयेदं काव्यं कृतमिति दर्शयन्नाह—

१६२४—व्याख्या-गम्यमिदं काव्य-
मुत्सवः सु-धियामलम्, ॥
हता दुर्-मेधसश् चा ऽस्मिन्
विद्वत्-प्रिय-तया मया. ॥ ३४ ॥

व्याख्यागम्यमित्यादि—व्याख्यागम्यं व्याख्यानाद्विना बोद्धुं न शक्यते। किमर्थमीदृशं कृतमिति चेत् उत्सवः सुधियामलं शास्त्रे क्षुण्णबुद्धीनां परं प्रमोदो जायते। एवं च सत्यस्मिन् काव्ये विषयभूतदुर्मेधसो व्याकरणबाह्याः मया हता नानुगृहीताः। तस्माद्विद्वत्प्रियतया विद्वांसः प्रिया यस्य मम विद्वत्प्रियः तद्भावस्तत्ता तया हेतुभूतयेति ॥

यत्रेदं काव्यं कृतं तद्दर्शयन्नाह—

१६२५—काव्यमिदं विहितं मया वलभ्यां
श्रीधरसेन-नरेन्द्र-पालितायाम्, ॥
कीर्तिरतो भवतान् नृपस्य, तस्य
प्रेम-करः क्षिति-पो यतः प्रजानाम्. ॥ ३५ ॥

## इति भट्टि-काव्ये द्वाविंशतितमः सर्गः ॥
## समाप्तश्चायं भट्टि-काव्य-ग्रन्थः ॥

काव्यमित्यादि—मयेदं काव्यं विहितं कृतम् । श्रीधरसूनुना नरेन्द्रनाम्ना नृपेण पालितायां रक्षितायां वलभ्यां वलभीनामपुर्याम् । अत एव काव्यविधानाँय या कीर्तिः सा तस्यैव राज्ञो भवतात् । आशिषि तातङ् । यतः प्रजानां प्रेमकरः प्रेमानुकूलः । आनुलोम्ये टः ॥

इति वलभीवास्तव्यस्य श्रीस्वामिसूनोर्भट्टमहाब्राह्मणस्य महावैयाकरणस्य कृतौ रावणवधे महातिङन्तकाण्डे लुङ्विलसितनाम्नो नवमपरिच्छेदस्य जटीश्वरो जयदेवो जयमङ्गल इति च नामभिस्त्रिभिः सुप्रसिद्धस्य अनेकशास्त्रव्याख्यानकृतौ टीकायां काव्यस्य 'अयोध्या-प्रत्यागमनं' नाम द्वाविंशः सर्गः ॥

॥ जयमङ्गलकृता टीका समाप्ता ॥